महावीराख्य आदित्यरूप पात्र में आत्मा अथवा पुरुषरूप ब्रह्म आज्यरूप[३८] में स्थित है। आज्य पयस् का सारतत्त्व है। प्रवर्ग्य में उपयुक्त पयस् अजा अर्थात् जन्मादिरहित (न जायते इति अजा) किं वा सर्वत्र गतिशील/व्याप्त (अज्, अजति गच्छति सर्वत्र व्याप्नोति इति अजा) अथवा गौ अर्थात् सर्वत्र गमनशील एवं व्याप्त (गम्, गा गतौ) ज्योतिःस्वरूप[३९] चैतन्य से सम्बद्ध देही पुरुष है[४०], जिसका महावीरस्थ आज्य में निक्षेप कर धर्म का निर्माण देहाभिमानी जीवरूप पुरुष[४१] के आदित्यस्थ परम पुरुष ब्रह्म में, अविद्याजन्य भेद बुद्धि का त्यागकर, विलय तथा ऐक्यानुभूति का द्योतक है। यजमान द्वारा धर्मपान इसी तादात्म्यजन्य ऐक्यानुभव तथा ब्रह्मानुभूति के लिए है। प्रवर्ग्य के अन्त में यज्ञिय पात्रों की पुरुषाकार व्यवस्थिति यज्ञ के परब्रह्मरूप पुरुषस्वरूप और यजमानरूप जीवस्वरूप पुरुष के ताद्रूप्य के ख्यापनार्थ है। जीवस्थ आत्मरूप पुरुष और आदित्यमण्डलस्थ पुरुष (ब्रह्म) वस्तुतः एक ही है[४२], समस्त जगत् उस ही से परिपूर्ण एवं व्याप्त है।[४३] वैदिक ऋषि इसी सत्यस्वरूप पुरुष के दर्शनार्थ पूषा देव से अपने हिरण्यमय अर्थात् ज्योतिःस्वरूप मण्डलरूप पात्र (ढक्कन) के अपसारण की प्रार्थना करता है[४४], यह पुरुष 'तमसः परस्तात्' तथा आदित्यवर्ण है, इसका ज्ञान ही मृत्यु का अतिक्रमण कराने वाला है, इसके अतिरिक्त कोई अन्य गति नहीं है।[४५] यह पुरुष (ब्रह्म) ही आदित्य (पूषा, सूर्य) के तेज का स्रोत है। प्रवर्ग्य में महावीरस्थ आज्य इसी आदित्यमण्डलस्थ पुरुष (ब्रह्म) का प्रतीक है। जीवस्थ आत्मरूप पुरुष द्वारा परम पुरुष (ब्रह्म) से ऐक्यावाप्ति किं वा तादात्म्यानुभूति ही प्रवर्ग्य-कर्म है।

❑

**सन्दर्भ :**


१ आपस्तम्ब श्रौतसूत्र, १५.५-१२

२ बौधायन श्रौतसूत्र, ९.६

३ कात्यायन श्रौतसूत्र, २६

४ ऐतरेय ब्राह्मण, ४.५

५ कात्यायन श्रौतसूत्र, २६.१.१७: प्रादेशमात्रमूर्ध्वमासेचनवन्तं मध्यसङ्गृहीतमूर्ध्वं-मेखलायास्त्र्यङ्गुलम्।

६ प्रवर्ग्य हेतु द्रव्टव्य कात्यायन श्रौतसूत्र, २६ ; आपस्तम्ब श्रौतसूत्र , ११.२.५ आदि ; बौधायन-श्रौतसूत्र, ४.६,७ ; शांखायन-श्रौतसूत्र, ५.९ आदि ; लाट्यायन श्रौतसूत्र, १.६ ; वैतान-श्रौतसूत्र, १३ ; गार्बे, जेड.डी.एम.जी.:, ३४.३१९ आदि ; वेबर, इन्दिशे स्तूदिएन, ९.२१८ आदि ; कीथ, दि रेलिजन एण्ड फिलोसॉफी ऑफ दि वेद एण्ड उपनिषद्स, भाग, २, १९२५, पृ. ३३२-३३ ।

७ कात्यायन श्रौतसूत्र, २६.२.३-४ : पत्न्यदर्शनम् ; अननूक्तिभिश्च।

८ ऐतरेय ब्राह्मण, ४.५ ; तदेतद्देवमिथुनं यद् धर्म : स यो धर्मस्तच्छिश्नं यौ शफौ तौ शफौ योपयमनी ते श्रोणिकपाले यत्पयस्तद्रेतस्तदिदमग्नौ देवयोन्यां प्रजनने रेतः सिच्यतेऽग्निर्वै देवयोनिः सोऽग्नेर्देवयोन्या आहुतिभ्यः सम्भवति।

९ वेदिश्शे स्तूदिएन, २.१३५।

१० कौषीतकि ब्राह्मण, ८.३,७ : असौ वै महावीरो योऽसौ (सूर्यः) तपति।

११ तदेव, ८.३ : शिरो वा एतद्यज्ञस्य यन्महावीरः।

१२ काठक ब्राह्मण, ३१.६ ; शतपथ-ब्राह्मण, ९.४.२.१९ : असौ वा आदित्यो धर्मः। शतपथ ब्राह्मण, १४.१.३.१७: एष वै धर्मो य एष (सूर्यः) तपति। तुलनीय कौषीतकि-ब्राह्मण, २.१। द्रष्टव्य तैत्तिरीयारण्यक ५.११.२ : धर्म इति दिवाऽऽचक्षीत। सम्राडिति नक्तम्।

१३ तैत्तिरीय - संहिता, २.२.७.२ : ब्रह्मवर्चसं वै धर्मः।

१४ शतपथ-ब्राह्मण, १४.१.१.२७ : एष वै संवत्सरः। य एष तपति। एष उ प्रवर्ग्यः, १४.१, ३.२८, २.२.१२, ३.२.२२ : संवत्सर एषः। य एष तपति। एष उ प्रवर्ग्यः।

१५ तदेव, १४.१.२.१५ ; एष वै ब्रह्मणस्पतिः। स एष तपति। एष उ प्रवर्ग्यः।

१६ तदेव, १४,१.३.४ : एष उ यमः। य एष तपति। एष हीदं सर्वं यमयति। एतेनेदं सर्वं यतम्। एष उ प्रवर्ग्यः।

१७ तदेव, १४.१.३.५ : एष वै मखः। य एष तपति। एष उ प्रवर्ग्यः।

१८ तदेव, १४.१.३.२६ : एष वै स्वाहाकारः, स एष तपति। एष उ प्रवर्ग्यः।

१९ तदेव, १४.१.३,१५ : एष वै पिता। य एष तपति। एष उ प्रवर्ग्यः।

२० तदेव, १४.२.१.५, २.२.५०, ३.१.१५-१६, ३.१.२९ : शिरः प्रवर्ग्यः।

२१ तदेव, १४.२.२.२९ : एष वै धर्मः। य एष तपति। एष हीदं सर्वं धारयति। एतेनेदं सर्वं धृतम्। एष उ प्रवर्ग्यः।

२२ तदेव, १४.२.२.४६ ; सर्वं वे प्रवर्ग्यः। १४.३.२.१८ : सर्वं वै पूर्णम्।

२३ तदेव, १४.३.२.२३ : इमे वै लोकाः प्रवर्ग्यः।

२४ तदेव, १४.३.२.२४ : एता वै देवताः प्रवर्ग्यः। अग्निर्वायुरादित्यः।

२५ तदेव, १४.३.२.२५ : यजमानो वै प्रवर्ग्यः।

२६ तदेव, १४.३.२.२६ : अग्निहोत्रं वै प्रवर्ग्यः।

२७ तदेव, १४.३.२.२७: दर्शपूर्णमासौ प्रवर्ग्यः।

२८ तदेव, १४.३.२.२८ : चातुर्मास्यानि वै प्रवर्ग्यः।

२९ तदेव, १४.३.२.२९ : पशुबन्धो वै प्रवर्ग्यः।

३० तदेव, १४.३.२.३० : सोमो वै प्रवर्ग्यः।

३१ तदेव, ९.२.१.२१ : अग्निर्वायु रादित्यस्तदेते प्रवर्ग्याः।
१४.३.२.२४ : एता वै देवताः प्रवर्ग्याः। अग्निर्वायुरादित्यः।

१४.१.३.३ : असौ वा आदित्यो ब्रह्मारहरहः पुरस्ताज्जायते। एष उ प्रवर्ग्यः।

१४.१.३.६ : एष वै सूर्यः। य एष तपति। एष उ प्रवर्ग्यः।

१४.२.१.३ : आदित्यः प्रवर्ग्यः।

१४.२.१.९ : अयं वै पूषा। योऽयं पवते। एष हीदं सर्वं पुष्यति। एष उ प्रवर्ग्यः।

१४.१.४.१६ : वृषा वै प्रवर्ग्यः।

१४.३.१.२६ : एष वै वृषा हरिः। य एष तपति। एष उ प्रवर्ग्यः।

३२ तैत्तिरीयारण्यक, ५.११.१ : असौ खलु वावैष आदित्यः। यत्प्रवर्ग्यः।

३३ शतपथ-ब्राह्मण, १२.१.३.५ : अथ यत्प्रवर्ग्येण यजन्ते। आदित्यमेव देवतां यजन्ते।

३४ (क) शतपथ-ब्राह्मण, १.१.२.१३ : यज्ञो वै विष्णुः ; ऐतरेय ब्राह्मण, ३.४ : विष्णुर्वै यज्ञः ; शतपथ ब्राह्मण, ३.१.४.५ : ब्रह्म यज्ञः ; श्रीमद्भगवद्गीता, ९.१६ ; अहं क्रतुरहं यज्ञः।

(ख) ऋग्वेद, १०.९०.१६ ; यज्ञेन यज्ञमयजन्त देवाः।
श्रीमद्भगवद्गीता, ४.२५ : ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति।
सैव, ४.२४ :ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना॥

३५ (क) ऋग्वेद, १.१६४.४६ :इन्द्र मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वान माहुः॥

द्रष्टव्य इस पर आचार्य यास्क-कृत टिप्पणी : इममेवाग्निं महान्तमात्मानमेक यात्मानं बहुधा मेधाविनो वदन्तीन्द्रं मित्रं वरुणमग्निं दिव्यं च गरुत्मन्तम् ....। (निरुक्त, ७.१८)

(ख) ऋग्वेद, ३.५५.१९ : महददेवानामसुरत्वमेकम्।

(ग) निरुक्त, ७.४ : महाभाग्याद्देवताया एक आत्मा बहुधा स्तूयते। एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति ... कर्मजन्मानः। आत्मजन्मानः। आत्मैवैषां रथो भवति। आत्माश्वः। आत्मायुधम्। आत्मेषवः। आत्मा सर्वं देवस्य देवस्य।

३६ यास्क, निरुक्त, १.७ : वीरो वीरयत्यमित्रान् वेर्तेवा स्याद गतिकर्मणो वीरयतेर्वा।

३७ तुलनीय ऋग्वेद, १०.८८.११ : यदेदेनमदधुर्यज्ञियासो दिवि देवाः सूर्यमादितेयम्।
१०.८८.६ : मूर्धा भुवो भवति नक्तमग्निस्ततः सूर्यो जायते प्रातरुद्यन्।

३८ मैत्रायणी-संहिता, ४.१.१२ : आज्यं वै यज्ञः।
४.१.१४ : आत्माऽऽज्यम्।

३९ यास्क, निरुक्त, २.६ : सर्वेऽपि रश्मयो गान उच्यन्ते। आदित्यरश्मियों के गोत्वहेतु अवलोकनीय ऋग्वेद, १.१५४.६ : तां वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः।
अत्राह तदुरुगायस्य वृष्णः परमं पदमव भाति भूरि॥

आदित्य भी गोपदवाच्य है : ''आदित्योऽपि गौरुच्यते - उतादः परुषे गवि'' (ऋग्वेद, ६.५६.३) (निरुक्त, २.६)

४० मैत्रायणी-संहिता, २.३.१ : पयो वै पुरुषः।

४१ यास्क, निरुक्त, २.३ : पुरुषः पुरिषादः पुरिशयः पूरयतेर्वा पूरयन्तरित्यन्तरपुरुषमभिप्रेत्य।

४२ तैत्तिरीयोपनिषद्, २.८ : स यश्चायं पुरुषे यश्चासावादित्ये स एकः ; वाजसनेयिसंहिता, ४०.१७ : योऽसावादित्ये पुरुषः सोऽसावहम् ; ईशोपनिषद्, १६ : तेजो यते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषः सोऽहमस्मि।

४३ तैत्तिरीयारण्यक, १०.२०.१० :

यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित्।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्ण पुरुषेण सर्वम्॥

४४ वाजसनेयि-संहिता, ४०.१७ :

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्।
योऽसावादित्ये पुरुषः सो ऽसावहम्।

ईशोपनिषद्, १५ :

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्।
तत्त्वं पूषन्नापावृणु सत्यधर्माय दृष्टये॥

४५ वाजसनेयि-संहिता, ३१.१८ :

वेदाहमेतं पुरुषं महान्तमादित्यवर्ण तमसः परस्तात्।
तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्थाः विद्यतेऽयनाय॥

- मा नों द्विक्षत् कश्चन। (अथर्ववेद १२.१.२३)
  विश्व में मुझसे कोई भी द्वेष न करे।

- यदुवक्थानृतं जिह्वया वृजिनं बहु। (अथर्ववेद १.१०.३)
  जिह्वा से असत्य वचन बोलना बहुत बड़ा पाप है।

# वेदेषु भौतिकविज्ञान-सूत्राणि

- डॉ. कपिलदेव द्विवेदी

विदितमतेत् समेषामपि विपश्चितां यद् वेदेषु धर्मार्थ-काममोक्षात्मक-पुरुषार्थचतुष्टयस्य विशदं वर्णनं समुपलभ्यते। सहस्रशो मन्त्रा यज्ञियक्रियाकलापं समाजदर्शनम् आचारशिक्षां नीतिशिक्षां लोककल्याणं च वर्णयन्ति, परन्तु विज्ञान-विषय-प्रतिपादकानां मन्त्राणाम् अपि संख्या शतशो वर्तते। अतएव भगवता मनुना प्रोच्यते- **'सर्वज्ञानमयो हि सः'** (मनु० २.७) अर्थात् सर्वेषाम् अपि ज्ञानानां विज्ञानानां च सूत्ररूपेण वर्णनं वेदेषु विद्यते। वेदालोचनेन विज्ञायते यद् अवितथमेतद् वचनम्। अस्मिन् सन्दर्भे आचार्य-यास्कस्य वचनमेतत् सुतराम् अवधेयं यद् :

**न ह्येषु प्रत्यक्षमस्ति, अनृषेरतपसो वा।** (निरुक्त ० १३.१२)

अस्याभिप्रायोऽयं यद् वेदानां रहस्यम् आर्षबुद्ध्या कठोरेण श्रमेण चावगन्तुं पार्यते। वेदेषु सन्ति शतशो मन्त्राः, ये भौतिक-विज्ञानं, रसायनशास्त्रं, वनस्पतिशास्त्रं, जीवविज्ञानं, शिल्पविज्ञानं, कृषिविज्ञानं, गणितशास्त्रं, ज्योतिर्विज्ञानं, वृष्टिविज्ञानं, पर्यावरणम्, आयुर्वेदं भूगर्भविज्ञानं च वर्णयन्ति।

दिङ्मात्रम् इह कानिचिद् भौतिकविज्ञान-सूत्राणि समुपस्थाप्यन्ते। ऊर्जाया रूपान्तरणं भवति (Transformation of Energy) यथा च प्रतिपाद्यतेः

**अग्ने .. त्मना शतिनं पुरुरूपम्।** (ऋग्० २.२.९)

**स्तीर्णा अस्य संहतो विश्वरूपाः।** (ऋग्० ३.१.७)

इह पुरुरूप-शब्देन विश्वरूप-शब्देन च अग्नेः विविधरूपग्रहणं संसूच्यते।

ऊर्जा (Energy) विश्वव्यापिनी वर्तते। सैव इन्द्र-मित्र-वरुण-रुद्र-विष्णु-ब्रह्म-पूषादिशब्दैः वर्ण्यते।

**त्वमग्न इन्द्रः त्वं विष्णुः, त्वं ब्रह्मा०।** (ऋग्० २.१.३)

त्वं वरुणः, त्वं मित्रः, त्वम् अर्यमा०। (ऋग्० २.१.४)

त्वं रुद्रः, त्वं पूषा,त्वं सविता, त्वं भगः ०। (ऋग्० २.१.६-७)

## ऊर्जा विश्वव्यापिनी (Energy Omnipresent) :

विश्वस्य केतुः, भुवनस्य गर्भः, आ रोदसी अपृणात्। (यजु० १२.२३)

आ रोदसी भानुना भात्यन्तः। (ऋग्० १०.४५.४)

**ऊर्जाया दश विशिष्टरूपत्वम् :** यथा-सौर-ऊर्जा, जलीय-ऊर्जा, भूगर्भीय-ऊर्जा, प्रभृतयः। यथा चाद्यत्वे भौतिकविज्ञाने निर्दिश्यते-मैकेनिक-ऊर्जा, रासायनिक-ऊर्जा, सौर-ऊर्जा, नाभिकीय-ऊर्जा-प्रभृतयः।

दश प्रति धुरं वहन्ति वह्नयः। (ऋग्० ८.३.२३)

समुद्रान्तर्गतो वह्निः अथर्ववेदे शान्तो घोरश्च वर्ण्यते।

यो व आपोऽग्निराविवेश ... घोरं तदेतत्। (अथर्व० १६.१.८)

शिवान् अग्नीन् अप्सुसदः ०। (अथर्व० १६.१.१३)

यजुर्वेदे अग्नेः (ऊर्जायाः) रूपत्रयं वर्ण्यते : सौर-ऊर्जा, भौतिकोऽग्निः, समुद्रान्तर्गतो वह्निश्च।

दिवस्परि प्रथमं जज्ञे, द्वितीयं जातवेदाः, तृतीयमप्सु०। (यजु० १२.१८)

**ऊर्जाया विश्वव्यापित्वम् :** एतद् अथर्ववेदे विस्तरेण प्रतिपाद्यते। सेयम् ऊर्जा अग्निरूपेण भुवि, अन्तरिक्षे, दिवि च सर्वत्र संचरति। ऊर्जा व्यक्तरूपेण अव्यक्तरूपेण वा सर्वत्र प्रसरति। अतएव यत्र कुत्रापि घर्षणं भवति, तत्र विद्युत उत्पत्तिः।

दिवं पृथिवीमनु-अन्तरिक्षं, ये विद्युतम् अनुसंचरन्ति।<br>
ये दिक्ष्वन्तर्ये वाते अन्तस्तेभ्यो अग्निभ्यः। (अ. ३.२१.७)

**विविधयन्त्राणां वर्णनम् :** तैत्तिरीयसंहितायाम् ऊर्जाहेतोः प्रयुज्यमानानां विविध-यन्त्राणां वर्णनं प्राप्यते। तद्यथा - १. वातयन्त्रम् - वायुप्रसारणाय वायोश्च भारमानार्थं यन्त्रम्। २. ऋतुयन्त्रम् - शीतोष्णतादिमानार्थं यन्त्रम्। ३. दिग्यन्त्रम् - दिशाबोधकं यन्त्रम्। ४. तेजोयन्त्रम् - प्रकाशजननार्थं यन्त्रम्। ५. वाग्यन्त्रम्- ध्वनिप्रसारणयन्त्रम्।

वातानां यन्त्राय, ऋतूनां यन्त्राय, दिशां यन्त्राय, तेजसे यन्त्राय।
वाचो यन्त्रम् अशीय। (तैत्ति० सं० १.६.१.२)

**परमाणुषु अग्नेरस्तित्वम् :** सर्वेषु परमाणुषु अग्नितत्त्वं निहितं वर्तते। अग्नितत्त्वस्य सत्तयैव तत्र ऊष्मा गतिश्च संलक्ष्यते।

अग्निर्मूर्धा दिव : .... अपां रेतांसि जिन्वति। (ऋग्० ८.४४.१६)

विश्वा रजांसि शुशुचानो अस्थात्। (ऋग्० १.१४९.४)

## विश्वस्य प्रथमो वैज्ञानिकः अथर्वा ऋषिः

अथर्वा ऋषिः आविष्कारत्रयं व्यदधात्। (१) आरण्योर्मन्थनेन वह्ने-रुत्पादनम्, (२) सरोवरस्थजल-मन्थेन जलीय-विद्युतः (Hydro-electric, Hydel) उत्पादनम् (३) उत्खनन-पद्धत्या भूगर्भीय-अग्नेः (पुरीष्य अग्नि, Oil and natural gas) निःसारणम्। यजुर्वेदे विस्तरेण आविष्कारत्रयम् एतद् वर्ण्यते।

(क) तमु त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः। (यजु० ११.३३)
अरण्योर्निहितो जातवेदाः। (ऋग्० ३.२९.२)

(ख) त्वामग्ने पुष्करादधि अथर्वा निरमन्थत। (यजु० ११.३२)

(ग) पुरीष्योऽसि विश्वभरा अथर्वा त्वा प्रथमो निरमन्थदग्ने। (यजु० ११.३२)
पृथिव्याः सधस्थाद् अग्निं पुरीष्यम् .... खनामः। (यजु० ११.२८)

**भूः परिक्रामति :** ऋग्वेदे यजुर्वेदे च वर्ण्यते यद् भूः सूर्यं परितः परिक्रामति। भुवः परिक्रमणेनैव अहोरात्रं संपद्यते। ऋग्वेदे स्फुटमेतत् प्रतिपाद्यते यत् पृथिवी (क्षाः) शुष्णम् (सूर्यम्) परितः प्रदक्षिणित् (प्रदक्षिणां परिक्रमां वा विदधाति)।

(क) आयं गौः पृश्निरक्रमीद्, असदन्मातरं पुरः।
पितरं च प्रयन् स्वः। (ऋग्० १०.१८९.१। यजु० ३.६)

(ख) क्षाः .. शुष्णं परि प्रदक्षिणित्। (ऋग्० १०.२२.१४)

**सूर्योऽपि परिक्रामति :** यजुर्वेदे प्रतिपाद्यते यत् न केवलं भूरेव परिक्रामति, अपि तु परिक्रामति। न केवलं सूर्य एवं अपितु सकलं जगत् परिक्रामति।

समाववर्ति पृथिवी समुषाः समु सूर्य :।
समु विश्वमिदं जगत्। (यजु० २०.२३)

**सूर्य एव चन्द्रं प्रकाशयति :** चन्द्रमसि नास्ति प्रकाशः। सूर्यः स्वकिरणैर चन्द्रं प्रकाशयति। आचार्ययास्केनापि निरुक्ते प्रतिपादितम् एतत् -

(क) सुषुम्णः सूर्यरश्मिः चन्द्रमा गन्धर्वः। (यजु० १८.४०)

(ख) अथाप्यस्य एको रश्मिः चन्द्रमसं प्रति दीप्यते।
आदित्यतोऽस्य दीप्तिर्भवति। (निरुक्त २.६)

**सोमः (Hydrogen) सूर्यस्य शक्तिदाता :** अथर्ववेदे वर्ण्यते यत् सूर्यस्य शक्ति-स्त्रोतः सोमः (Hydrogen) एव वर्तते।

सोमेन-आदित्या बलिनः। (अथर्व० १४.१.२)

**नक्षत्रेषु सोमतत्त्वस्य महत्त्वम् :** नक्षत्रेषु प्रकाशकत्वं कान्तिमत्त्वं च सोमस्य (Hydrogen) सत्तयैव वर्तते। सोम (Hydrogen) एव तेषाम् अधिष्ठाता राजा च। तत्र सोमो वाष्परूपेण (Gas) वर्तते।

(क) अथो नक्षत्राणाम् एषाम् उपस्थे सोम आहितः। (अथर्व० १४.१.२)

(ख) शकधूमं नक्षत्राणि यद् राजानम् अकुर्वत। (अथर्व० ६.१२८.१)

## सूर्ये वाष्यद्वस्य (Hydrogen and Helium gases) अस्तित्वम् -

यजुर्वेदे स्फुटम् एतत् प्रतिपाद्यते यत् सूर्ये उच्चशक्तियुक्तम् (उद्वयसम्) वाष्पद्वयं वर्तते। वाष्पद्वयस्य निर्देशः 'अपां रसः' 'अपां रसस्य यो रसः' इति वचनेन क्रियते। 'अपां रसः' जलस्य सारभागः सूक्ष्मरूपो वा Hydrogen gas वर्तते। 'अपां रसस्य यो रसः' जलसार-भागस्यापि साररूपः सूक्ष्मरूपो वा Helium वर्तते। सूर्ये नवति-प्रतिशतं 'हाइड्रोजन' वर्तते, अष्ट-प्रतिशतं च 'हीलियम गैस' वर्तते। मन्त्रे 'सूर्ये सन्तम्' इत्यनेन सूर्ये उच्चशक्तिसमन्वितस्य वाष्पद्वयस्य सत्ता निर्दिशयते।

**सूर्य परितो बाष्पसमूह :** ऋग्वेदे दीर्घतमस ऋषेः कथनम् अस्ति यन मया योगदृष्ट्या सूर्यं परितः उच्चशक्तिसंपन्नो वाष्प (Gas) - समूहों दृष्टः। 'शकमयं धूमम्' इत्यनेन महाशक्तियुक्तं वाष्पं निर्दिशयते।

शकमयं धूमम् आराद् अपश्यम्
विषूवता पर एनावरेण। (ऋग्० १.१६४.४३)

**सूर्ये कालिमा (Spots)** : ऋग्वेदे वर्ण्यते यत् सूर्यस्य चक्षुः (मण्डलम्) रजसा आवृतम् (धूलियुक्तम्) वर्तते। वैज्ञानिकैः तथ्यमेतत् स्वीक्रियते।

**सूर्यस्य चक्षू रजसैत्यावृतम्।** (ऋग्० १.१६४.१४)

**सप्त महासूर्याः (7 Solar Systems)** - अथर्ववेदे संसूच्यते यद् ब्रह्मणि सप्त सूर्याणां सहैव वासोऽस्ति। एतेन विज्ञायते यत् सप्त महासौरमण्डलं वर्तते। ताण्ड्य-महाब्राह्मणेऽपि सप्तसूर्याणाम् उल्लेखः प्राप्यते।

**यस्मिन् सूर्या अर्पिताः सप्त साकम्।** (अथर्व० १३.३.१०)

**सप्त आदित्याः।** (तां० महा० २३.१५.३)

**आकर्षणशक्तिः (Law of Gravitation)** : वेदेषु आकर्षणशक्तेः स्पष्टम् उल्लेखः प्राप्यते। सर्वेषु परमाणुषु आकर्षणशक्तिवर्तते। सर्वे परमाणवः अन्योन्यम् आकर्षन्ति।

**एको अन्यत् चकृषे श्विमानुषक्।** (ऋग्० १.५२.१४)

सूर्यः पृथिवीम् आकर्षणशक्त्या धारयति।

**दाधर्थ पृथिवीम् अभितो मयूखैः।** (यजु० ५.१६)

**सविता यन्त्रैः पृथिवीम् अरम्णात्।** (ऋग्० १०.१४९.१)

आकर्षणशक्त्यैव सर्वाणि नक्षत्राणि द्यावाभूमी च स्वस्थाने प्रतिष्ठितानि सन्ति।

**स्वर्णरम् अन्तरिक्षाणि रोचना,**
**द्यावाभूमी पृथिवीं स्कम्भुरोजसा।** (ऋग्० १०.६५.४)

**सूर्यकिरणेभ्यो विद्युत्प्रवाहः (Electro-magnetic Radiation)** - ऋग्वेदे वर्ण्यते यत् सूर्यकिरणैः सह मित्रावरुणौ एकस्मिन्नेव रथे चरतः। मित्रो धनात्मक आवेशः (Positive Charge) वरुणश्च ऋणात्मक आवेशः (Nagative charge)। तौ संगत्य विद्युत्-प्रवाहम् (Electro-magnetic Radiation) कुरुतः। तत एव विद्यत्-चुम्बकीय-तरंगाः (Electro-magnetic waves) प्रवहन्ति। मन्त्रे च 'अयःशीर्षा' पदं चुम्बक शाक्ति द्योतयति।

**(क) मित्रावरुणा ... रथर्यतः साकंसूर्यस्य रश्मिभिः।** (ऋग्० ८.१०१.१-२)

**(ख) प्र यो वां मित्रावरुणाऽजिरो दूतो अद्रवत्।**
**अयः शीर्षा मदेरघुः।** (ऋग्० ८.१०१.३)

**ऊर्जाया द्रव्यस्य चान्योन्यरूपेण परिवर्तनम् (Conservation of mass and energy)** - ऋग्वेदे सिद्धान्तस्यास्य सूत्रम् उपलभ्यते। अदितेः (प्रकृत्याः, Mass) दक्षः (ऊर्जा, Energy) अजायत। दक्षात् (ऊर्जायाः) च अदितिः (प्रकृतिः) अजायत। सिद्धान्तस्यास्य अभिप्रायोऽयं यद् द्रव्यमेव ऊर्जारूपं धत्ते ऊर्जा च द्रव्यस्य रूपम्। एतदेव आइन्स्टाइन (Einstein) - महोदयेन प्रतिपाद्यते - $E = mc^2$

**अदितेर्दक्षो अजायत, दक्षादु-अदितिः परि।** (ऋग् १०.७२.४)

**महद् उल्बम् (Ozone Layer)** - ऋग्वेदे अथर्ववेदे च 'महद् उल्बम्' इत्यनेन ओजोन-स्तरस्य निर्देशः क्रियते। गर्भस्थ-शिशु-रक्षणाय यथा 'उल्बम्' भवति, तथैव भू-रूप-शिशु रक्षणाय परमात्मना एतद् महद् उल्बं रचितम् अस्ति। स्थविरं स्थूलरूपम् एतदस्ति। अस्य रूपं च हिरण्ययं सुवर्णाभं वर्तते।

**(क) महत् तदुल्बं स्थविरं तदासीद्, येनविष्टितः प्रविवेशिथापः।**
(ऋग्० १०.५१.१)

**(ख) तस्योत जायमानस्य उल्ब आसीद् हिण्ययः।** (अथर्व० ४.२.८)

**जले अग्नीषोमयो : (Oxygen and Hydrogen) अस्तित्वम्** - अथर्ववेद प्रतिपाद्यते यद् जले आग्नः (Oxygen) सोमश्च (Hydrogen) विद्येते।

**आसन्नग्नीषोमौ बिभ्रत्याप इत् ताः।** (अथर्व० ३.१३.५)

**जल-निर्माण-सूत्रम् :** ऋग्वेदे जल-निर्माण-सूत्रम् उपलभ्यते यद् मित्र-वरुणयोः सम्मेलनेन जलोपलब्धिर्भवति। आधुनिकं विज्ञानसूत्रं वर्तते- $H_2O$। हाइड्रोजन-गैसस्य कणद्वयम्, आक्सीजन-गैसस्य चैकः कणः, एकस्मिन् पात्रे स्थापिते विद्युत्-तरङ्ग-प्रवाहेण तद् जलं भवति। मन्त्रे तु निर्दिश्यते यद् जलार्थं मित्रं (Oxygen) वरुणं (Hydrogen) च गृहाण।

**मित्रं हुवे पूतदक्षं वरुणं च रिशादसम्। धियं घृताचीं साधन्ता।** (ऋग्० १.२.७)

**वृक्षेषु अवितत्त्वम् (Chlorophyll)** - वनस्पति-विज्ञानदृष्ट्या महत्त्वपूर्ण तथ्यमेकम् अथर्ववेदे प्राप्यते। तत्र स्फुटमेतद् उच्यते यद् अवितत्त्वस्य सत्तयैव वृक्षा वनस्पतयश्च हरिताः सन्ति। रक्षार्थकाद् अव्धातोर्निष्पन्नोऽयम् अविशब्दो जीवनरक्षकतत्त्वं निर्दिशति। विज्ञानदृष्ट्या एतत् क्लोरोफिल् (Chlorophyll) इति कथ्यते।

**अविर्वै नाम देवतर्तेनास्ते परीवृता**
**तस्या रूपेणेमे वृक्षा हरिता हरितस्रजः।** (अथर्व० १०.८.३१)

**वृक्षेषु जीवत्वम्-** अथर्ववेद निर्दिश्यते यद् वृक्षा अपि सजीवाः। तेऽपि प्राणन्ति श्वसन्ति च।

**महद् ब्रह्म .... येन प्राणन्ति वीरुधः।** (अथर्व० १.३२.१)

वृक्षास्तिष्ठन्त एव स्वपन्ति। ते सजीवा इव शयनक्रियां कुर्वन्ति।

**अस्थुर्वृक्षा ऊर्ध्वस्वप्नाः।** (अथर्व० ६.४४.१)

वृक्षाः प्राणवायुम् उद्गिरन्ति। सामवेदे कथ्यते यत् ते समानवायुम् (Oxygen) उद्गिरन्ति।

**तमित्समानं वनिनश्च वीरुधोऽन्तर्वतीश्च सुवते च विश्वहा।** (साम० १८२४)

एवं सुकरम् एतद् वक्तुं यद् वेदेषु शतशो विज्ञान-सूत्राणि वर्तन्ते।

❑

# वैदिकवाङ्मये विश्वबन्धुत्व भावना

- प्रो. वीरेन्द्र कुमार मिश्र

वैदिकवाङ्मये न केवलं यज्ञादीनां वर्णनमेवोपलभ्यतेऽपित्वत्र सर्वेषां मानवानां कृते विश्वबन्धुत्व भावनायाश्चिन्तनं प्रचुरमात्रायां विद्यते। वैदिकानामृषीणां हृदयमतिविशालमस्ति। तेषां हृदये सङ्कीर्णतायै लेशमात्रमपि स्थानं नास्ति। सर्वेषां चिन्तनेषु पूर्णतया औदार्यं दृश्यते। औदार्यस्यास्यकारणं किम्? कथं तेषां मनसि विश्वबन्धुत्वभावनायाः प्रश्न उपस्थितः? ऋषिभिः केन कारणेन हितचिन्तनं कृतमे? अस्मिन् विषये स्वाभाविकरूपेण जिज्ञासा भवत्येवे।

उपर्युक्त प्रश्नानां विषये उत्तरोऽयं यदखिलविश्वमेतत् परब्रह्मणः प्रसूतम्। परमेश्वरस्येयं सृष्टिः। एतस्मादेव कारणात् जीवमात्रं परब्रह्मणोऽशमात्रमस्ति। सर्वेषां जीवानामन्तःकरणे, हृदयप्रदेशे सर्वसमर्थस्य, सर्वशक्तिसम्पन्नस्य, परमैश्वर्यविभूषितस्य परमेश्वर्स्यनिवासः। अलौकिकमायायाः प्रभावेण तस्य व्याप्तिः सर्वत्र। यथा श्रीमद्भगवद्गीतायामुक्तं स्वयमेव परब्रह्मस्वरूपेणभगवता श्रीकृष्णेन -

**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।**
**भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥[1]**

यदा सर्वेषां भूतानामुत्पत्तिः परब्रह्मणः भवति तदातेषां सर्वेषां मध्ये बन्धुत्वसम्बन्धस्त्व स्त्येव। एवमृषीणांचिन्तने विश्वबन्धुत्वभावना स्वाभाविक्येव। ऋषिभिः व्यष्टिभावनया प्रार्थना न कृता। तेषां प्रार्थनायां समष्टिभावना पूर्णरूपेण दृश्यते। तस्यां प्रार्थनायां सर्वेषां कल्याणभावना निहितास्ति। यथोक्तं यजुर्वेदे :-

विश्वानि देव सवितर्दुरितानि परा सुव। यद्भद्रंतन्न आ सुव।[2] हे सवितृ देव! सर्वाणि पापकर्माणि भवन्तो दूरीकुर्वन्तु। अस्माकं सर्वेषां कृते यत्कल्याणकरमस्ति तदस्मभ्यं देहि।

न केवलं वैदिकवाङ्मयेऽपितु परवर्ति साहित्येऽपि कथितं यत्किञ्चिद् आत्मार्थेऽनुकूलं न भवति तदन्येषामपिकृते न करणीयम्। यथा-आत्मनः प्रतिकूलानि परेषां न समाचरेत्''।[3]

यजुर्वेदस्य एकस्मिन् मन्त्रे विश्वशान्ति सन्देशो, विश्वबन्धुत्वोत्कृष्ट तमा भावना, परस्परं सौहार्दं, साहाय्यभावना पूर्णतया दृग्गोचरी भवति यथा

**मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे । मित्रस्य चक्षुषा समीक्षामहे ।।**[४]

अहं मित्रस्या दृष्ट्या सर्वान् प्राणिनः पश्यानि । वयं मित्रस्य दृष्ट्या परस्परं पश्याम ।

ऋग्वेदस्य विविधस्थलेषु अनेके मन्त्रा एतादृशाः सन्ति येषु विश्वबन्धुत्वभावनाविषयकं चिन्तनं प्राप्यते । स्वार्थसिद्धिं विहाय अन्येषां प्राणिनां हितरक्षणं मनुष्यस्य परमो धर्मः । मनुष्यो मनुष्यं सर्वथा रक्षतु यथोक्तमृग्वेदे -

**अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः ।**
**हस्तघ्नो विश्वा वयुनानि विद्वान् पुमान् पुमांसं परि पातु विश्वतः ।।**[५]

ऋषीणां प्रार्थनासु सर्वेषां जनानां कल्याणं निहितं वर्तते । ये जनास्तेषां समक्षं सन्ति न वा सन्ति । ये जना अतिदूरङ्गताः । तेषां सर्वेषां कृतेऽपि सुमति प्राप्तये प्रार्थनाक्रियतेऽसमाक-मृषिभिः । यथा-यांश्च पश्यामि यांश्च न तेषु मा सुमति कृधि तवेद विष्णो बहुधा वीर्याणि ।।[६]

अथर्ववेदस्य मन्त्रेऽस्मिन् कीदृशी उत्कृष्टतमा भावना दृश्यते । अस्मिन् संसारेऽस्मान् निकषा ये जनाः सन्ति वयं तेषामेव हितचिन्तनं कुर्मः । अस्माकमृषयो विषयेऽस्मिन्नग्रगण्याः सन्ति । ये जना ऋषीणां दृष्टिपथे न सन्ति तेषां प्राणिनामपि हित चिन्तनं कुर्वन्ति ऋषयः ।

अखिल विश्वस्य कल्याणकामनया, विश्वबन्धुत्वभावनया, पारस्परिकसद्भावदृष्ट्-यैवैकमत्येन स्थातुं भावाः प्रकटिता ऋग्वेदेऽथर्ववेदे तैत्तिरीयब्राह्मणे च यथा -

**सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम् ।**
**देवा भागं यथा पूर्वे संजानाना उपासते ।।**[७]

हे जना ! यथा सदा सर्वदा दिव्यशक्तिसम्पन्ना देवाः परस्परं विरोधं विहाय ऐकमत्येन स्वहविर्भागं स्वीकुर्वन्ति तथैव भवन्तः सर्वे भेदभावं परित्यज्य सहैव सम्मिल्य गच्छन्तु, सम्मिल्य स्तोत्राणि पठन्तु । युष्माकं मनांसि समानानि सन्तु । पारस्परिकसद्भावनयैकमत्येन च स्थिता भवन्तु ।

एतादृशा भावा ऋग्वेदेऽथर्ववेदे तैत्तिरीयब्राह्मणे च समानरूपेण दृश्यन्ते यथा-

**समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम् ।**
**समानं मन्त्रमभि मन्त्रये वः समानेन वो हविषा जुहोमि ।।**[८]

**समानी व आकूतिः समाना हृदयानि वः ।**
**समानमस्तु वो मनो यथा वः सुसहासति ।।**[९]

मानवानां कृते ऋषीणामुपदेशोऽस्ति। अस्माकं सर्वेषां प्रार्थना एकविधास्तु, विचार-प्रदानार्थं स्थानमेकमेव भवतु। मनो मननस्य साधनस्वरूपमन्तः करणं चित्तं विचारजन्यज्ञानञ्च एकविधानि सन्तु। अहं त्वया सहैकं रहस्यपूर्णं (कथनं) कथयामि तुभ्यमेकविधं हविः प्रदाय सुसंस्कृतं करोमि।

जनानामाकूतिः सङ्कल्पाश्चित्तवृत्तयो हृदयानि समानानि भवन्तु। सर्वेषां मनः समानमस्तु, येन युष्माकं कार्याणि पूर्णरूपेण संघटितानि भवन्तु। सर्वे जनाः संसारेऽस्मिन् सानन्दं जीवनं यापयन्तु। अत्र ऋषिभिः कृता प्रार्थना सर्वेभ्यो जनेभ्योऽस्ति न तु आत्मार्थे।

यत्र सहस्रेषु वेदमन्त्रेषु याचना कृता तत्रैव त्यागस्योत्कृष्टाभावना अपि दृश्यन्ते। उदारहृदयस्य मानवस्य, धनाय परिग्रहणाय च, लोभविहीना भावना प्रकटितास्ति यथा -

ओ हि वर्तन्ते रथ्येव चक्राऽन्यमन्यमुपं तिष्ठन्त रायः।[१०]

राय (वैभव) रथस्य चक्रमिवावर्तितो भवति। ह्य एकस्य पार्श्वे आसीत् अद्यापरस्य पार्श्वेऽस्ति श्वस्तृतीयस्य पार्श्वे भविष्यति।

लौकिक संस्कृतवाङ्मये लक्ष्मीविषये महाकवेर्बाणभट्टस्य विचारा एतादृशाः सन्ति यथा- ''लब्धापि खलु दुःखेन पाल्यते। न परिचयं रक्षति। न अभिजनमीक्षते। न रूपमालोकयते। न कुलक्रममनुवर्तते। न शीलं पश्यति। .... न त्यागमाद्रियते। अद्यापि न क्वचिदपि निर्भरम् आबध्नाति पदम्। ..... यथा यथा चेयं चपला दीप्यते तथा तथा दीपशिखा इव कज्जल-मलिनमेवकर्म केवलं उद्वमति।''[११]

धनस्यार्जनं न केवलमात्मार्थे अपितु परेषां हिताय, बन्धुबान्धवानां हिताय च कर्तव्यम्। अथर्ववेदस्यैकस्मिन् मन्त्रे एतादृशं वर्णनमृषिना कृतम् यथा -

**शतंहस्त समाहर सहस्रहस्त सं किर।**[१२]

शतहस्तैधनार्जनं कर्तव्यं सहस्त्रहस्तैस्तस्य वितरणं करणीयम्।

यजुर्वेदे उक्तं यत् कस्यापि धनस्य लोभो न करणीयः। त्यागभावेन धनस्योपभोगः कर्तव्यः यथा-

**ईशा वास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।**
**तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम्॥**[१३]

अन्नोत्पादनस्य सम्बन्धे कथितमृग्वेदे यः कोऽपि जनोऽन्येषां जनानां ध्यानमकृत्वैव स्वार्थे एव कृषिकर्मकृत्वान्नमुत्पादयति तस्यान्नोत्पादनं व्यर्थमस्ति। एवं स्वार्थदृष्ट्योत्पादितमन्नं

मनुष्यं विनाशयति यथा-

**मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत् स तस्य।**
**नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ।।**[१४]

अस्मिन्मन्त्रे स्वकथ्यं पूर्णरूपेण दृढसङ्कल्पेन प्रस्तौति यत् सत्यमहं ब्रवीमि स्वार्थपूर्णविधिनोत्पादितमन्नमन्नोत्पादकस्य जनस्य वधं करोति। यो न देवायार्पयति न च मित्राय ददाति अपितु स्वयमेवान्नस्य भक्षणं करोति सः केवलं पापमेवाश्नाति।

अन्नब्रह्मविवेचनप्रसङ्गे तैत्तिरीयोपनिषदि एतादृशः भावः प्राप्यते। ऋषिः कथयति यत् योऽन्नार्थिभ्योऽन्नं न प्रयच्छति स्वयंमेवान्नं भक्षयतितमन्नंभक्षयन्तं पुरुषमहमन्नमेव भक्षयामि यथा -

**यो मा ददाति स इदेव माइवाः। अहमन्नमन्नमदंतमा३द्मि** [१५]

अस्माकमृषिभिः न केवलं मानवानां चिन्तनमुपस्थापितमपित्वस्मिन् जगति पशुपक्षिणामपि चिन्तनं कृतम्। गृहस्थाश्रमे गृहस्थानां कृते पञ्चमहायज्ञानां विधानं विहितम्।[१६] पञ्चमहायज्ञेषु सन्ति देवयज्ञ ब्रह्मयज्ञ, भूतयज्ञ, पितृयज्ञ, नृयज्ञाः। नृयज्ञोऽतिथिसेवास्ति तैत्तिरीयो पनिषदि "अतिथि देवो भव"[१७] सर्वेषांमानवानां कृते उपदेशोऽस्ति। भूतयज्ञे तु निखिल-पशुपक्षिणार्थमपि "बलिवैश्वदेवस्य" विधानमत्याश्यकरूपेण विहितं सर्वेभ्यो गृहस्थेभ्यः।

श्राद्धतर्पणावसरे स्वपूर्वजैः सहान्येभ्यो मानवेभ्यः ऋषिभ्यो जलाञ्जलिः प्रदीयते। अनेनैव सह नागसर्पादिभ्यो जीवेभ्यो जलाञ्जलिं दत्वा तेषां तृषाशान्त्यर्थमस्माकमृषिभिर्विधानं कृतम्। कीदृशी सद्भावपूर्णादृष्टिरस्ति अस्माकमृषीणाम्।

विश्वबन्धुत्वभावनया परिपूर्णाः ब्रह्मज्ञानिनः ऋषयः कथयन्ति-युष्माकं सर्वेषां जलं समानमस्तु, अन्नं समानं भवतु युष्मान् समाने बन्धने बध्नामि। यूयमेकविधबन्धने तिष्ठत। यथा-समानी प्रपा सह वोऽन्नभागः समानेयोक्त्रे सह वो युनज्मि।[१८]

यदा जनानां हृदयेषु ईर्ष्या द्वेषदम्भपाखण्डादीनां स्थानं न भवति, एतेषां सर्वेषां दोषाणां पूर्णतया निराकरणं भवति, विचारेषु हृदयेषु व परिवर्तनं जायते तदा तेषां विचारा उत्तमा भवन्ति। जना अपरेषां दुःखं दृष्ट्वा दुःखमनुभवन्ति, अपरेषां सुखेन सुखमनुभवन्ति, अन्येषामुन्नतिं दृष्ट्वा हर्षिता भवन्ति तदैव मनुष्याणामन्तर्मनसि अन्येषां हितकरणाय भावनोदभवति, हृदयं विशालं भवति। "परोपकारः पुण्याय पापाय परपीडनमिति" सिद्धान्तमाचरन्ति। निखिला वसुन्धरा कुटुम्बमिव प्रतिभाति। "वसुधैव कुटुम्बकम्"[१९] इति भावना स्वयमेवोत्पद्यते। भेददृष्टिः स्वयमेव समाप्यते। जनाः स्वयमेव तथैव सर्वेषु प्राणिषु स्निह्यन्ति यथा धेनुः स्ववत्से

स्निह्यति। अस्मिन् प्रसङ्गेऽथर्ववेदीयपैप्पलादसंहितायां मन्त्रो लभेखः

**सहृदयं सांमनस्यमविद्वेषं कृणोमि वः।**
**अन्योअन्यमभि हर्यत वत्सं जातमिवाघ्न्या ।।**[20]

भवतां समेषां मध्यतः विद्वेषं दूरीकृत्याहं सहृदयतां सौमनस्यञ्च स्थापयामि यथा धेनुर्नवजाते वत्से स्निह्यति तथैव भवन्तः सर्वे परस्परं स्नेहं कुर्वन्तु।

अथर्ववेदीयपैप्पलाद संहिताया अन्यस्मिन् मन्त्रे विश्वबन्धुत्वभावनायाः सन्देश उपलभ्यते। बन्धवः परस्परं द्वेषं न कुर्वन्तु भगिनी परस्परं ईर्ष्यां न करोतु। सर्वे ऐकमत्ये भवन्तु। तुल्यव्रतयुक्ता भवन्तु मधुरं वदन्तु -

**मा भ्राता भ्रातरं द्विक्षन्मा स्वसारमुत स्वसा।**
**सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया ।।**[21]

यदा मानवा उदारहृदय तां नाप्नुवन्ति तदा तेषां हृदयेषु अयं निजोऽयमपर एतादृशी गणना क्षुद्रचेतसो जनाः कुर्वन्ति उदारचरितानां जनानां कृते सम्पूर्णा वसुधा कुटुम्बमिव प्रतिभाति।

एवमेव वैदिकवाङ्मयस्य सिंहावलोकनेन ज्ञायते यदस्माकमक्षयमूलनिधिस्वरूपे वेदे देवानां प्रार्थनाः स्तुतयः याचना एव न सन्ति अपित्वत्र बहुजनहिताय बहुजन सुखाय विश्वबन्धुत्व दृष्ट्यात्युत्तमाभिव्ययक्तिरस्ति। न केवलं वैदिकवाङ्मयेऽपितु लौकिक संस्कृतस्य काव्येषु रूपकेषु विश्वबन्धुत्वभावना पूर्णरूपेण पल्लविता पुष्पिता च दृश्यते।

❑

**सन्दर्भ :**


१ श्रीमद्भगवद्गीता - १८.६१
२ यजुर्वेद : ३०.३
३ पञ्चतन्त्रे-काकोलूकीये शशकपिञ्जल कथा- श्लोक संख्या १०२, मोतीलाल बनारसीदास, दिल्ली १९७९
४ यजुर्वेद : ३६.१८
५ ऋग्वेद : ६.७५.१४
६ अथर्ववेद : १७.१.७
७ ऋग्वेद - १०.१९१.२ ; ''सं जानीध्वं सं पृच्यध्वं सं वो मनांसि जानताम् देवा भागं ...... उपासते ।।'' अथर्ववेद - ६.६४.१ ; तैत्तिरीय ब्राह्मणम् - २.४.४.४

८ ऋग्वेद - १०.१९१.३ ; अथर्ववेद - ६.६४.२ ; तैत्तिरीय ब्राह्मणम् : २.४.४.५
९ ऋग्वेद - १०.१९१.४ ; अथर्ववेद - ६.६४.३ ; तैत्तिरीय ब्राह्मणम् : २.४.४.५
१० ऋग्वेद - १०.११७.५
११ कादम्बरी (व्याख्याकार : पण्डितः कृष्णमोहन शास्त्री, चौखम्भा संस्कृत संस्थानं, वार ासी, चतुर्थ संस्करण, संवत् २०३३, सन् १९७६) पृ.स. ३२०-३२१
१२ अथर्ववेद : ३.२४.५
१३ यजुर्वेद : ४०.१
१४ ऋग्वेद : १०.११७.६
१५ तैत्तिरीयोपनिषद् - ३.१०.६
१६ आश्वलायन गृह्यसूत्रम् चतुर्थोऽध्यायः, पारस्करगृह्यसूत्रम् - २.९।
प्रायः सर्वेषां गृह्यसूत्राणां विषयोऽयं वर्णितः ऋषिभिः।
मनुस्मृतिः ३.६५ ; ''अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथि पूजनम्॥ मनु. ३.७०
१७ तैत्तिरीयोपनिषद् - १.१०.२
१८ अथर्ववेद : ३.३०.६
१९ अयं निजः परोवेति गणना लघुचेतसाम्।
उदारचरितानां तु वसुधैव कुटुम्बकम्॥
पञ्चतन्त्रेऽपरीक्षितकारके सिंहकारक मूर्ख ब्राह्मण कथा, श्लोक संख्या - ३७, मोतीला ऽ बनारसीदास, दिल्ली, १९७९
२० पैप्पलादसंहिता - ५.१९.१
२१ पैप्पलादसंहिता - ५.१९.३

# अथर्ववेदे राज्यविज्ञानम्

- डॉ. श्रीकिशोर मिश्रः

वेदा अस्माकं राष्ट्रस्य संस्कृतेर्मूलाधारभूताः। सनातनपरम्परया प्रवहन्त्या आध्यात्मिक-सांस्कृतिकप्रेरणारूपिण्याः पावनगङ्गाया अक्षुण्णेयं ज्ञानधारा वेदोद्भवैव। तत्रापि चतुर्षु वेदेषु राष्ट्रभावनाया दृष्टया अथर्ववेदः सर्वानतिशेते। ऐहिकामुष्मिकोभयफलकस्याथर्ववेदस्य महत्त्वं गृह्यकर्मणां प्रतिपादनेन सुतरां वर्द्धते। सुप्रथितस्यैतिह्यविदो घोषालमहोदयस्याभिप्रायेण अथर्ववेदे सामाजिक सौमनस्यराजनीतिप्रज्ञाराष्ट्रियै-कात्मताविषकयका विचाराः सम्यक्तया प्रतिपादिताः। अत्रत्यं भूमिसूक्तं तु विश्ववाङ्मये प्रथमतया मातृभूमिवन्दनमुपदिशति राष्ट्रिय-भावैरनुप्राणितम्। अथर्ववेदोक्तेषु मन्त्रेषु राष्ट्रिभावना राज्यशासनविज्ञानेन सह सुसम्बद्धा इदङ्कालेऽपि समुचितां राज्यप्रणालीं निर्दिशति। अत्राथर्ववेदे राज्यविज्ञानमधिकृत्य मन्त्रोद्धरणैः साकं कश्चन विषयः प्रस्तूयते।

यद्यपि प्रजानां सुखसमृद्धये, सौमनस्यार्थं शत्रुनाशार्थं निरामयनिवासार्थं, सामाजिक-समुन्नत्यै च बहवो मन्त्रा विप्रकीर्णतया राज्यविज्ञानविषयका राष्ट्रभावनासंवर्द्धका अथर्ववेदे वर्तन्ते तथापि प्रत्यक्षं राज्यशासनपरा राष्ट्रसम्बद्धाश्च ये मन्त्रा एकत्रास्माभिरवलोक्यन्ते ते वक्ष्यमाणसूक्तेषु मुख्यतो विद्यन्ते -

> पर्णमणिधारणम् (३.५), राष्ट्रधारणम् (३.८), राज्याभिषेकः (४.८), सेनानिरीक्षणम् (४.३१), सेनासंयोजनम् (४.३२), विजयप्रार्थना (५.३), दुन्दुभिद्वारा शत्रुसेना-त्रासनम् (५.२०.२१, ६.१२६), राष्ट्रसभा (७.१२), राष्ट्रभृदप्सरसः (७.१०९), राष्ट्राभिवर्द्धनम् (१.२९), शत्रुसेनासम्मोहनम् (३.१.२), स्वराज्ये प्रतिष्ठा (३.३) प्रजाभी राज्ञः संवरणम् (३.४)

राष्ट्रख्यं तत्त्वं तत्सिद्धान्तो वा सर्वतः प्रथमं प्राक्तनैः साक्षात्कृतधर्मभिः ऋषिभिरेव प्रत्यपादीत्यथर्ववेदे श्रूयते। ऋषयो मानवानां भद्रं कल्याणं कामयमानास्तपसा राष्ट्रतत्त्वमनुभूय दीक्षया च सङ्कल्पं विधाय राष्ट्रं प्रकाशयामासुः। तत एव राष्ट्रं प्रादुरभूदिति श्रुतावेवमुपदिश्यते-

**भद्रमिच्छन्त ऋषयः स्वर्विदस्तपो दीक्षामुपनिषेदुरग्रे।**<br>**ततो राष्ट्रं बलमोजश्च जातं तदस्मै देवा उपसंनमन्तु॥** (अ. १९.४१.१)

राष्ट्र शब्दस्योल्लेखोऽथर्ववेदे नैकेषु स्थानेषु समुपलभ्यते, यथा- ३.४.१; ३.८.१; १२.३.१०; १३.१.१ ड्य एकत्र स्थले-त्वं राष्ट्राणि रक्षसि (१९.३०.३) इत्येवं बहूणां राष्ट्राणां सङ्केतः, किञ्च दर्भमणिर्बहूना राष्ट्राणां रक्षकत्वेन समुपदिश्यते। 'देशोपसर्गाः शमु नो भवन्तु' (१८.८.८) अत्र मन्त्रे (सम्भवतः एकत्रैव) देशशब्दोऽपि सन्दृश्यते, तथाचदेशे सम्प्राप्तानां सम्मावितानाञ्च सङ्कटानां निवारणार्थं शान्तिः सम्प्रार्थ्यते।

राष्ट्रोत्पत्तिः रोहितात् परमात्मनः समजायतेत्यथर्ववेदस्योपदेशः। तेनैवेदम्प्रथमतया राष्ट्रभावना प्राकाशि समदायिच। ततो राष्ट्र निर्भय भावः प्रादुरभूत्। स्वशक्त्या द्युलोक-पृथिवीलोकयोरूपयोगित्वं विधाय धनधान्यसमृद्धये प्रयत्नः समारब्ध इत्युच्यते-(१३.१.५)

**आ ते राष्ट्रमिह रोहितोऽहार्षीद् व्यास्थन्मृधो अभयं ते अभूत्।**
**तस्मै ते द्यावापृथिवी रेवतीभिः कामं दुहाथामिह शक्वरीभिः॥**

इति राष्ट्रस्योत्तमतायै सुखवृद्धिरावश्यिकी, घृतदुग्धादिसमृद्धिश्चापि प्रार्थ्यते -

**परित्वा धात् सविता देवो अग्निर्वर्चसा मित्रावरुणावभित्वा।**
**सर्वा अरातीरवक्रामन्नेहीदं राष्ट्रमकरः सूनृतावत्॥** (१३.१.२०)

सं ते राष्ट्रमनक्तु पयसा घृतेन (१३.१.८) इति च।

राष्ट्रे प्रवराणामवराणांञ्च समरूपोऽधिकारो भवेत्, समेऽपिचसङ्गत्य देशस्य रक्षणं सम्पादयेयुरित्यस्त्याथर्वणिक उपदेशः -

नितद् दद्यिषेऽवरे परे च यस्मिन्नाविथावसा दुरोणो (५.२.६) इति राष्ट्रप्रजासु प्राणिषु च तेजः सम्पादनं सत्यव्यवहृतिश्च भवेताम् - यथा -

**उदेहि वाजिन् यो अप्स्वन्तरिदं राष्ट्रं प्रविश सूनृतावत्।**
**यो रोहितो विश्वमिदं जजान स त्वा राष्ट्राय सुभृतं बिभर्तु॥** (१३.१.१)

राष्ट्रे वीराः प्रजाः सन्तु, शस्त्रास्त्राण्युत्तमानि भवन्तु, तत्र चाक्षय्यं क्षात्र बलमुद्भवतु तच्च कृत्स्नमपि सात्त्विकभावापन्नं प्रसरत्विति मन्त्रोक्तिः।

**एषामहमायुधा संस्याम्येषां राष्ट्रं, सुवीरं वर्धयामि।**
**एषां क्षत्रमजरमस्तु जिष्णवेषां चित्तं विश्वेऽवन्तु देवाः॥** (३.१९.५)

तदेव राष्ट्रे निवासयोग्यं समनुभूयते यत्र सज्जनाः चारित्र्यसम्पन्नाः धर्मनिष्ठा आदर्श-भूताश्च व्यक्तयो भवन्ति। अथर्ववेदेनो पदिश्यते यदेवविधाभिः प्रजाभि, राष्ट्रं विशालं

विपुलकीर्तिमच्च सत् संवेश्यं सञ्जायते-

**आ यातु मित्र ऋतुभिः कल्पमानः संवेशयन् पृथिवीमुस्रियाभिः ।**
**अथास्मभ्यं वरुणो वायुरग्निर्बृहद् राष्ट्रं संवेश्यं दधातु ॥** (३.८.१)

प्रजासु परस्परं सौमनस्यार्थं प्रेमप्रवृद्ध्यै चाथर्ववेदे बहुत्रोपदिश्यते प्रार्थ्यते च - ३.३०.१

**सहृदयं सांमनस्यमविद्वेषं कृणोमि वः ।**
**अन्यो अन्यमभि हर्यत वत्सं जातमिवाघ्न्या ॥** इत्यादौ (६.६४.१.३)

अथर्ववेदे स्थिरस्य राज्यसञ्चालनस्य महत्त्वं प्रसाध्यते । साम्प्रतं शिथिलस्याध्रुवस्य वा केन्द्रसर्वकारस्य प्रभावात् सर्वत्र शैथिल्यमङ्गीक्रियते राजशास्त्रविद्भिरधुनातनैः । अस्माक-मृषयरुवथर्व वेदोपदिष्टं ध्रुवं सुप्रतिष्ठञ्च शासनमभिलषितवन्तः । तैः क्रान्तदर्शिभिः साम्प्रतिकीयं समस्या पूर्वत एवानुभूतापाकृता च । तथा ह्यथर्ववेद उपदिशति-

**आ त्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलत् ।**
**विशस्त्वा सर्वा वाञ्छन्तु मा त्वद् राष्ट्रमधिभ्रशत् ॥** (६.८७.१)
**इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमुधारय ॥** (६.८७.२)

अत्र 'विशस्त्वा सर्वा वाञ्छन्तु' इति निरङ्कुशत्वं (Dictatorship) शासकस्य ध्रुवस्यापि निवार्यते ! तथा च राष्ट्रमु धारय इत्येवं राष्ट्रधारणार्थमेव ध्रुवत्वं भवत्वित्यपि निर्दैश्यते । अग्रतनसूक्तेऽपि- द्युवो राजा विशामयम् (६.८८.१) इत्थं प्रजानां कृते स्थिरशासनं श्रेष्ठं मन्यते । ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम् (६.८८.२) इति मन्त्रे इन्द्राग्नी प्रार्थ्येते राष्ट्रस्य ध्रौव्याय ।

स्थिरः शासक एव राष्ट्ररक्षणे क्षमो भवति शत्रूणां निरसनाय चेत्युपदिश्यते मन्त्रे (३.८८.३)

**'ध्रुवोऽच्युतः प्र मृणीहि शत्रून्छत्रूयतोऽधरान् पादयस्व'** इति ।

अन्यच्चावधेयं यदिदङ्काले यथा लोकविधानसभाहिसदस्या अविशवासप्रस्तावादि द्वारा शासकस्यास्थिरतायै यतन्ते तथा न कर्तव्यमिति वैदिकं राज्यविज्ञानतत्त्वम् । सभासदस्याः सर्वेऽपि स्थिर शासनार्थामुद्युक्ताः स्युरित्युपदिशत्याथर्वणी श्रुतिर्यथा (६.८८.३)

**सर्वा दिशः संमनसः सध्रीचीर्ध्रुवाय ते समितिः कल्पतामिह ।**

साम्प्रतिके काले शासनसभासदामप्रशस्तः शिष्ट जनानुपयुक्तो वाग्व्यवहार

सर्वैरनुभूयतेऽनुचितः। अस्यापाकरणमुपदिश्यतेऽथर्वश्रुतौ।

**'ये ते के च सभासदस्ते मे सन्तु सवाचसः'** (७.१२.२)

इत्यत्र शिक्षणमथर्ववेदेन क्रियते यत् सभासदां व्यवहारः सौम्यो भवेन्नतूद्धतः, यथा अद्यत्वे दृश्यते।

अद्यत्वे शासकानां स्वार्थं सङ्ग्रहविधिरर्जनप्रवृत्तिश्चानुदिनं प्रवर्धमाना सन्दृश्यते। अत्र समाधानार्थं वेदे राज्ञस्त्यागपरत्वं सर्वथाभिप्रेतम्। अयमुपदेशोऽथर्ववेदे पर्णमणिधारणविधानेन प्रसाध्यते। अत्रायं भावो यद् राजा सामान्यरूपेण निःस्वार्थतया च वैयक्तिकं जीवनक्रममनुतिष्ठेन्न तु स्वर्णरत्नादिना व्यक्तिगतां समृद्धिं भावयेत्। पर्णमणिरयं राष्ट्राधिपस्य कृते आदर्शभूतो विद्यते। तथोक्तम् -

**मयि क्षत्रं पर्णमणे मयि धारयताद् रयिम्।**
**अहं राष्ट्रस्यभीवर्गे निजो भूयासमुत्तमः।।** (३.५.२) इत्यादि।

इदमपि विशिष्टमेवाथर्वश्रुतौ श्रूयते यत् प्रजाभी राज्ञः कल्याणकामना न वैयक्तिकी क्रियते, अपितु विधीयते राष्ट्रसञ्चालनार्थमेव। तदुक्तम् - ... यद् राजानमकुर्वत्, भद्राहमस्मै प्रायच्छन्निदं राष्ट्रमसादिति (६.१२८.१) वस्तुतो लोकानुरञ्जनात् प्रजारञ्जनाच्च राजा सञ्जायते न तु वैयक्तिकरागोपभोगादित्यथर्ववेदे उपदिश्यते -

सोऽरज्यत ततो राजन्योऽजायत (१५.८.१) इति।

राज्ञा सङ्गृहीतस्य धनस्य प्रजाभ्यो वितरणं यथायोग्यं विधेयमिति पौनःपुन्येन श्रुतावुपलभ्यते-ततो न उग्रो वि भजा वसूनि (३.४) इत्याथर्वणिकसूक्ते। तत्रापि समग्रसङ्ग्रहस्य षोडशतमोभागः इष्टापूर्त्ताख्येषु सामान्यजनोपकृतिपरेषु शिक्षा-धर्म-समाजसेवादिकर्मसु विनियोक्तव्य एव। साम्प्रतं तु शिक्षादौ न्यूनतमो भागो निर्धार्यत इति समाजे विपर्यस्ता असन्तोषभूयिष्ठा च दशा प्रत्यक्षमनुभूयते। 'यद राजानो विभजन्त इष्टापूर्वस्य षोडशम्' (३.२९.१) इत्याथर्वणिकदृशा इष्टापूर्त्तकर्मार्थं षोडशतमभागस्य व्यय आवश्यकः इष्टापूर्त्तस्वरूपं तु-

**अग्निहोत्रं तपः सत्यं वेदानाञ्चानुशासनम्।**
**आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते।।**
**वापीकूपतडागादिदेवतायतनानि च।**
**अन्नप्रदानमारामाः पूर्त्तमित्यभिधीयते।।** इति जावूकर्ण्योक्ते :

यज्ञ-वेदाध्ययना-किञ्चनसत्कृति-कूपमन्दिरोपवनादिनिर्मिति रूपमवधार्यते । इष्टापूर्त्तरहितो राजा प्रजाधनानाञ्चौर एवाभिधीयते मार्कण्डेयपुराणे 'इष्टापूर्वविनाशाय तद् राज्ञश्चौरधर्मिणः ।'

एवं भूयांसो निर्देशा राज्यविज्ञानसम्बद्धा अथर्ववेदे समुपलभ्यन्ते येषां पालनेन साम्प्रतिक्यो विसङ्गतयोऽपि निराकर्तुं शक्यन्ते ।

❑

- कालो ह सर्वस्येश्वरो। (अथर्ववेद १९.५३.८)
  काल ही समग्र विश्व का ईश्वर है।

- नासुंन्वता सचते पुष्यता चन। (ऋ.वे. ५.३४.५)
  परमात्मा अपुरुषार्थी पुष्ट जन का भी साथ नहीं देता।

- येषामिन्द्रस्ते जयन्ति। (ऋ. वे. ८.१६.५)
  परमात्मा जिसका साथी होता है, उसकी विजय होती है।

# अयं यज्ञो भुवनस्य नाभिः

- डॉ. कृष्ण लाल

हम अल्पज्ञों को बोध कराने के लिये परमेश्वर ने वेद में स्वयं प्रश्न किये हैं - पृथ्वी का चरम सिरा क्या है ? पृथ्वी की नाभि या केन्द्र कहाँ है या क्या है ? तथा वाणी का परम उत्पत्ति स्थान कहां है ? -पृच्छामित्वा परमन्तं पृथिव्या, पृच्छामित्वा भुवनस्य नाभिः। पृच्छामि वाचः परमं व्योम ॥[1]

अगले मन्त्र में स्वयं ही हमें समझाने के लिये इन प्रश्नों के संक्षिप्त उत्तर इस रूप में दिये हैं - ''यह यज्ञ वेदि ही पृथ्वी का चरम सिरा है, यह यज्ञ संसार का केन्द्र है .... और यह ब्रह्मा (जीवात्मा या केन्द्र) ही वाणी का उत्पत्ति स्थान है'' - इयं वेदिः परो अन्तः पृथिव्या अयं यज्ञा भुवनस्थ नाभिः। ....... ब्रह्मायंवाचः परमं व्योमः ॥[2]

अप्रत्यक्ष रूप से यहाँ गेंद के समान पृथ्वी की गोलाई सङ्केलित है क्यों कि किसी गोलक पर कोई भी बिन्दु उसका सिरा माना जा सकता है और कोई भी बिन्दु उसका केन्द्र होगा। यही बात पुरुष सूक्त में भी अभिप्रेत होगी। यदि हम पुरुष को ब्रह्माण्ड- गोल के रूप में देखें। किसी भी गोल पदार्थ में हम असंख्य बिन्दुओं द्वारा उसके असंख्य सिरों (शीर्षों) और असंख्य केन्द्रों की विद्यमानता मान सकते हैं। इसलिये जहाँ भी यज्ञवेदि है वही पृथ्वी का एक सिरा और जहां यज्ञ किया जा रहा है वही पृथ्वी का सारे लोक का केन्द्र है।

नाभि शरीर का केन्द्र है क्योंकि उसमें सारी नाड़ियाँ जुड़ी होती हैं। इसीलिये इसे प्राणों की गाँठ कहा गया है।[3] सारी सृष्टि में यज्ञ निरन्तर चलता रहता है, एक प्रकार से यज्ञ को समस्त सृष्टि का केन्द्र कहा जा सकता है। यज् धातु के महर्षि पाणिनि ने तीन अर्थ बताये हैं देवपूजा सङ्गतिकरण और दान[4] देव अर्थात् परमेश्वर की पूजा, उसका आज्ञापालन और उसकी व्यवस्था, उसके द्वारा स्थापित नियमों का पालन है। सभी बड़ी-बड़ी शक्तियाँ यथा सूर्य, चन्द्रमा, ग्रह, नक्षत्र, पृथ्वी, जल, वायु, समुद्र आदि उस देव के नियमों का पालन करते हुए उसकी आज्ञानुसार अपने अपने कर्तव्य का निर्वाह करते हैं।

यही हम इस विश्वयज्ञ में सङ्गतिकरण भी देखते हैं। यह सङ्गतिकरण, तालमेल भी अद्भुत है। सूर्य, वायु, जल सभी एक दूसरे का सहयोग कर रहे हैं- युगों से। सृष्टि के आरम्भ

से ही सभी ग्रह-नक्षत्र अपने अपने निश्चित मार्ग पर गति कर रहे हैं, कभी एक दूसरे से टकराते नहीं, अकल्पनीय सङ्गति है उनमें। सूर्य वाष्पीकरण के द्वारा मेघों की सृष्टि करता है। वायु मेघों को अपेक्षित स्थान पर वर्षा के लिये पहुँचाता है। वृष्टि होती है, औषधि- वनस्पति फलती-फूलती है। प्राणियों को अन्न मिलता है। यही सृष्टि का दान है, यज्ञ है, परोपकार है। मेघ अपने लिए वर्षा नहीं करते, नदियाँ अपने पीने हेतु जल प्रवाहित नहीं करतीं। सूर्य अपने लिये नहीं तपता।[५]

नाभि वह स्थान या अङ्ग अथवा तत्त्व है जो सबको एक सूत्र में बाँधता है जिस प्रकार नाभि से बँधे हुए ही गर्भ जन्म लेते हैं।[६] यहाँ यह स्मरणीय है कि गर्भस्थ शिशु नाभि के माध्यम से ही माता से पोषण प्राप्त करता है। इस आधार पर एक ही माँ से नाभिद्वार पोषण प्राप्त करने वाले शिशुओं को सनाभि या सम्बन्धु कहा जाता है।

यास्क ने अपने उपर्युक्त कथन की पुष्टि में ऋग्वेद का निम्नलिखित मन्त्र उद्धृत किया है-[७]

द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम्। द्युलोक मेरा पिता या पालक तथा जन्मदाता, यहीं, द्युलोकस्थ सूर्य में नाभि अथवा केन्द्र है यह विस्तृत भूमि माता है अर्थात् अन्नादि आवश्यक पदार्थों का निर्माण करने वाली उन्हें उत्पन्न करने वाली है। मन्त्र में द्युलोक अथवा वहाँ स्थित सूर्य में नाभि बताने का अभिप्राय यह है कि पृथ्वी अन्तरिक्ष में होने वाली क्रियाओं का वही केन्द्र अथवा मूल है। पूर्वोद्धृत मन्त्र में जहाँ यज्ञ को भुवन, प्राणिजगत् की नाभि बताया गया है, वहाँ भी पृथ्वी के भौतिक यज्ञ के साथ-साथ सूर्य द्वारा द्युलोक में निरवरोध चलाया जा रहा यज्ञ भी अभिप्रेत है।

सायण के अनुसार द्युलोक में नाभि का अभिप्राय है कि यहाँ सूर्य में भूमि के सभी रस विद्यमान हैं, क्योंकि वही अपनी किरणों से वाष्पीकरण द्वारा पृथ्वी से इस (जल) लेकर अन्तरिक्ष में पहुँचाता है जिससे वर्षा होती है, उससे अन्न होता है, अन्न से कार्य और उससे प्राणी होते है।[८] इस प्रकार प्राणि सृष्टि की नाभि अथवा केन्द्र द्युलोकस्थ सूर्य है। सायण ने यहीं अन्तरिक्ष में द्युलोक को पिता बताया है। तदनुसार अन्तरिक्ष सभी विस्तृत रिक्त स्थान कर नाम है। महर्षिदयानन्द के अनुसार द्यौ, से यहाँ प्रकाशित होता हुआ सूर्य अभिप्रेत है।[९] वही सारी सृष्टि की नाभि अर्थात् बन्धन है।

सम्भवतया इसी आधार पर पुरुष सूक्त में परम पुरुष के नाभि स्थान से अन्तरिक्ष की उत्पत्ति बताई गई है।[१०] उसका अभिप्राय यह प्रतीत होता है कि सृष्टि की प्रमुख नियामक क्रियाओं के केन्द्र अथवा एक सूत्र में बन्धक विस्तृत अन्तरिक्ष अथवा ब्रह्माण्ड का रिक्त

स्थान है। इस उल्लेख से प्रतीत होता है कि वैदिक दृष्टि से अन्तरिक्ष का विस्तार सूर्य तक भी है क्योंकि सृष्टि की नाभि में स्थित यज्ञ का सबसे महत्त्वपूर्ण नियामक सूर्य ही है। यह बात और है कि द्युतिशील नक्षत्र के रूप में महामुनि यास्क ने सूर्य की गणना द्युलोक में की है। वहाँ उद्देश्य यह भी प्रतीत होता है कि तिस्र एव देवताः अर्थात् देवताओं के त्रिवर्ग में विभाजन की स्पष्ट करने के लिये पृथ्वी, अन्तरिक्ष और द्युलोक में उनकी स्थिति बताई गई है।

नाभिकीय विज्ञान बताता है कि पदार्थों के प्रत्येक कण में, परमाणु की नाभि (केन्द्र) में अतिसूक्ष्म स्थूल आँखों से अदृश्य अंवयवों इलेक्ट्रोन प्रोटोन, न्यूट्रोन का सङ्गतिकरण रूप यज्ञ निरन्तर चलता रहता है। ये नाभि में गतिशील रहते हैं। इसकी पुष्टि ऋग्वेद के एक मन्त्रांश से होती है जहाँ कहा गया है कि शाश्वत नियम के उत्पत्ति स्थान में नाभियाँ अथवा नाभिस्थ तत्त्व गति करते हैं।[११] इनकी सङ्गति से पदार्थों को विशेष आकार तथा स्वरूप प्राप्त होता है। दूसरे शब्दों में ये उन्हें विशेषता प्रदान करते हैं। जब इस नाभि में विस्फोट किया जाता है तो ये ही अवयव बिखर कर अतुल्य उर्जा उत्पन्न करते हैं। यह ही यज्ञ का देवपूजा, परमेश्वर की शक्ति का प्राकट्य रूप यज्ञ है। इस प्रकार भी यज्ञ भुवन की नाभि अथवा केन्द्र सिद्ध होता है।

इसी प्रकार शुक्लयजुर्वेद में यज्ञ को पृथ्वी की नाभि (मध्य) में स्थापित करने का उल्लेख है।[१२] जैसा कि पहले भी कहा जा चुका है, पृथ्वी गोल होने के कारण उसका कोई भी बिन्दु, कोई भी स्थान उसकी नाभि अथवा मध्य अथवा केन्द्र ही होगा। इस प्रकार पृथ्वी पर जहाँ भी यज्ञ होता है वही स्थान पृथ्वी का केन्द्र है। दूसरे शब्दों में यह कहना भी अनुचित न होगा कि मनुष्य की सभी क्रियाओं का केन्द्र व्यापक अर्थ में (अर्थात् देवपूजा, सङ्गतिकरण, दान रूप) यज्ञ ही है।

मनुष्य को अग्नि में आहुति-प्रदान- रूप यज्ञ तो करना ही चाहिये, अन्य कार्य भी उसके यज्ञभावना के अनुरूप होने चाहिये। यह भावना सृष्टि की सामान्य प्रक्रिया के अनुसार ही है।

❑

सन्दर्भः

१ ऋग्वेद १.१६४.३४ ; अथर्ववेद ९.१०.१३ (भुवनस्य से पहले विश्वस्य भी)
२ ऋग्वेद १.१६४.३५ ; अथर्ववेद ९.१०.१४ (भुवनस्य से पहले विश्वस्य भी) वा. सं. २३.६१,६२
३ प्राणानां ग्रन्थिरसि। हिरण्यकेशिगृह्यसूत्र १.५.१५
४ यज देवपूजासङ्गतिकरणदानेषु।
५ तु परोपकाराय फलन्ति वृक्षाः परोपकाराय वहन्ति नद्यः।
परोपकाराय दुहन्ति गावः परोपकारार्थमिदं शरीरम्॥ विक्रमचरितम् ६६

६ नाभिः सन्नहनानाभ्यासन्नद्धा गर्भा जायन्ते इत्याहुरेतस्मादेव ज्ञातीन् सनाभय इत्याचक्षते सम्बन्धव इति च । निरुक्त ४.२१

७ ऋग्वेद १.१६४.३३

८ नाभिभूतो भौमो सोऽत्र तिष्ठतीति शेषः ततश्चान्नं जायते, अन्नाद्रेतः रेतसो मनुष्य इत्येवं पारम्पर्येण जननसम्बन्धिनो हेतोः रसस्यात्र सद्भावात् । अस्मिन्नन्तरिक्षे पिता द्युलोकः ।

९ प्रकाशमाना सूर्यो विष्णुविवि । नाभिः बन्धनम् ।

१० नाभ्या आसीदन्तरिक्षम् । ऋग्वेद - १०.९०.१४

११ ऋतस्य योना समरन्त नाभयः । ऋग्वेद - ९.७३.१

१२ पृथिव्यास्त्वा नाभौ सादयामि । वा.सं. १.११ स्वा.द. तं. पूर्वोक्तं यज्ञं पृथिव्या नाभौ मध्ये सादयामि स्थापयामि ।

१३ अथर्ववेदः (९.९.२) में तीन नाभियों वाले चक्र (त्रिनाभि चक्रम्) में भी जो तीन नाभियों वाले चक्र का उल्लेख है, उसके अनुसार भी पृथ्वी, सूर्यरूप और सदा स्थिर नाभि भी सारे ब्रह्माण्ड के केन्द्र रूप एक परेश्वर की नाभिरूप सत्ता स्वीकार की गई है ।

- विश्वं तद् भद्रं यदवन्ति देवा । (ऋ.वे. २.२३.१९)
  देवता जिस प्रकार भी हमारी रक्षा करते हैं, वह हमारे लिए शुभ है ।

- अद्रोघ सत्यं तव तन्महित्वं । (ऋ.वे. ३.३२.९)
  हे द्रोहरहित ईश! तुम्हारी महिमा सत्य है ।

- इन्द्रं वाणीरनूषत । (ऋ.वे. १.७.१)
  हमारी वाणी ने परमात्मा की स्तुति की ।

# वेद प्रतिपादित देवहितआयु और उसका स्वरूप

- डॉ० प्रशस्यमित्र शास्त्री

ऋग्वेद का निम्न प्रसिद्ध मन्त्र है जिसे हम स्वस्तिवाचन में पढ़ने के साथ ही यजमान आदि के दीर्घ आयुस्य, आशीर्वाद एवं शुभ कामना प्रकट करने के लिए भी पढ़ते हैं -

**भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः**
**स्थिरैरङ्गैस्तुष्टुवांसस्तनूभि र्व्यशेम देवहितं यदायुः ।।** (ऋ. वेद १.८९.८)

इस मन्त्र में 'देवहित -आयु' की प्रार्थना की गई है। अब प्रश्न होता है कि यह देवहित आयु क्या है तथा इसका परिणाम कितना है? यही नहीं अपितु अनेक वेदमन्त्रों में चक्षुरादि इन्द्रियों के सबल होने के साथ ही जीवन एवं स्वास्थ्य आदि की जब कामना की जाती है तो वहाँ भी विशेषण के रूप में 'देवहित' शब्द प्रयुक्त होता है। जैसे -

**तच्चक्षुर्देवहितं पुरस्तां .... पश्येम शरदः शतं**
**जीवेम शरदः शतं ..... भूयश्च शरदः शतात्** (माध्यन्दिन यजु० ३६.२४)

## आचार्य सायण का अर्थ : यज्ञमय जीवन

चारों वेदों के सुप्रसिद्ध भाष्यकार आचार्य सायण 'भद्रं कर्णेभिः' आदि ऋग्वेदीय मन्त्र की व्याख्या मे 'देवहितं यदायुः' इस पद का भाष्य करते हुए लिखते हैं -

**''यदायुः षोडशाधिकशत प्रमाणं विंशत्यधिकशत प्रमाणं वा''** अर्थात् ''देवहित-आयु'' का तात्पर्य है कि ११६ वर्ष की आयु अथवा १२० वर्ष की आयु।

अब प्रश्न होता है कि सायणाचार्य के इस अर्थ का आधार क्या है? ''देवहित-आयु'' का प्रमाण ११६ या १२० वर्ष ही क्यों माना जाय? इसका उत्तर हमें छान्दोग्य-उपनिषद् के निम्न वाक्य से प्राप्त होता है-

**पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशति**
**वर्षाणि तत्प्रातः सवनं चतुर्विंशत्यक्षय गायत्री**

**तन्माध्यन्दिनं सवनं यान्यष्टा चत्वारिंशद वर्षाणि**
**तत् तृतीयं सवनम् इति।** (छान्दोग्योप० ३.१६.१.४)

अर्थात् मनुष्य का सम्पूर्ण जीवन ही एक यज्ञ है। इस यज्ञमय जीवन के प्रारम्भिक २४ वर्ष प्रातः सवन है जबकि अगले ४४ वर्ष माध्यन्दिन सवन है तथा अग्रिम ४८ वर्ष तृतीय सवन के रूप में समझना चाहिए। इस प्रकार इस का कुल योग ११६ वर्ष होता है।

यहाँ यह भी ज्ञातव्य है कि सोमयाग के प्रातः माध्यन्दिन एवं तृतीय सवन क्रमशः गायत्र, त्रैष्टुम एवं जागत कट जाते है। ये छन्द क्रमशः २४, ४४ एवं ४८ अक्षरों वाले होते हैं।

जहाँ तक १२० वर्ष का प्रश्न है, संभव है छान्दोग्योपनिषद् के किसी संस्करण में माध्यन्दिन सवन को भी ४८ वर्ष का स्वीकार किया गया हो।

## मनुष्य की औसत आयु एक सौ वर्ष

वैदिक ग्रन्थों में मनुष्य की औसत आयु एक सौ वर्ष मानी गयी है। ऐतरेय आरण्यक में लिखा है -

**शतं वर्षाणि पुरुषायुषो भवति।** (ऐ. आर. २१२९)

अर्थात् पुरूष की सामान्य आयु एक सौ वर्ष होती है। अन्यत्र भी इसी प्रकार का भाव वैदिक ग्रन्थों में उपलब्ध है -

**शतायुर्वै पुरुषः शतवीर्यः** (मैत्रायणी संहिता १६.४ )

**शतायुः पुरुषः शतेन्द्रियः** (तै० संहिता २.३.११५ )

माध्यन्दिन यजुर्वेद के चालीसवें अध्याय का द्वितीय मन्त्र है-

**कुर्वन्नेवेह कर्माणि-जिजीविषेच्छतं समाः।**

अर्थात् मनुष्य कर्म करते हुए सक्रिय सबल स्वस्थ्य रहकर ही एक सौ वर्ष पर्यन्त जीवन की कामना करे। यहाँ एक सौ वर्ष से तात्पर्य औसत रूप में एक सौ वर्ष है। इसका तात्पर्य यह नहीं कि एक सौ वर्ष से अधिक जीवन नहीं है। क्योंकि मन्त्रों में कहा भी है -

**भूयश्च शरदः शतात्।** (माध्यन्दिन यजु० ३६.४)

माध्यन्दिन शतपथ ब्राह्मण में भी लिखा है -

**अपि हि भूयां सि शताद् वर्षेभ्यः पुरुषो जीवति** (मा. शतपथ १९.३.१९)

## सम्प्रति भारतवर्ष में औसत आयु ५५ वर्ष

भारत वर्ष में इस समय मनुष्यों की आयु औसत रूप में केवल ५५ वर्ष मानी गई है। जबकि संयुक्त राष्ट्र के विश्व स्वास्थ्य सङ्गठन के १९९५ के आंकड़ों के हिसाब से अमेरिका, यूरोप तथा जापान प्रभृति विकसित देशों के मनुष्यों की औसत आयु ७० सत्तर वर्ष तक मानी गयी है। इन देशों में पौष्टिक भोजन एवं आम चिकित्सा सुविधाओं की अच्छी व्यवस्था होने से ऐसा है।

अफ्रीकी महाद्वीप के कई देशों जैसे- सोमालिया, इथियोपिया, उगाण्डा, आदि में तो औसत आयु मात्र ४० वर्ष ही मानी गई है। इन देशों में अचानक गरीबी, कुपोषण के साथ ही चिकित्सा व्यवस्था की जर्जर स्थिति होने से मृत्यु दर भी अधिक है अतः औसत आयु बहुत कम है।

इस प्रकार हम कह सकते हैं कि अभी विश्व में वेद प्रतिपादित एक सौ वर्ष की औसत आयु विश्व में कहीं भी परिलक्षित नहीं हो पा रही है।

## ''जरा'' ही देवहित आयु है

वास्तव में पूर्ण आयुष्य अर्थात् कम से कम एक सौ वर्ष की आयु के साथ ही स्वस्थ निरोग रहते हुए वृद्धावस्था के द्वारा मृत्यु को प्राप्त करना ही 'देवहित-आयु' की प्रप्ति है। रोग द्वारा अल्प समय में मृत्यु या दुर्घटना आदि के द्वारा आकस्मिक-मृत्यु की प्राप्ति का अभाव तथा पूर्ण निरोग रहते हुए वृद्धावस्था को प्राप्त कर मृत्यु की प्राप्ति की स्थिति का नाम ही देवहित-आयु की प्राप्ति है। इस सम्बन्ध में वैदिक ग्रन्थों के निम्न प्रमाण द्रष्टव्य हैं -

**जरा वै देवहितम् आयुः।** (मैत्रायणी० १.७.५)

यही वाक्य काठक संहिता तथा कपिष्ठल कठसंहिता में भी प्राप्त होता है। जैसे-

**जरा वै देवहितमायुः** (काठक संहिता ९.२) तथा (कपिष्ठल कठ संहिता ८.५)

## अभीष्ट आयु एवं आरोग्य प्राप्ति के लिए यज्ञ

श्रीमद्भगवतगीता में लिखा है -

**सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।**<br>
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्ट कामधुक्।।** (श्रीमद् भगवद्० ३.१०)

अर्थात् यज्ञ की रचना के साथ ही प्रजापति का यह निर्देश भी हुआ कि जो मनुष्य निरन्तर यज्ञ का अनुष्ठान करता है वह अभीष्ट कामनाओं को निरन्तर प्राप्त करता रहता है। अभीष्ट एवं यथाकाम आयु की प्राप्ति में यज्ञ सहायक होता है ! अथर्ववेद में इस सम्बन्ध में निम्न मन्त्र द्रष्टव्य है।

**न तं यक्ष्मा अरुन्धते नैनं शपथो अश्नुते ।**
**यं भैषजस्य गुल्गुलोः सुरभिर्गन्धो अश्नुते ।।** (अथर्ववेद १९.३८.१)

अर्थात् जो अग्नि होम में गुग्गुल का प्रयोग करता है, उसे क्षय आदि रोग नहीं होता।

चिकित्साशास्त्रों में जहाँ विविध रोगों के निवारण के लिए विविध प्रकार की ओषधियों एवं उनके द्वारा चिकित्सा करते हुए रोगों से मुक्ति का उल्लेख है वहीं इष्टियों एवं यज्ञों के सम्पादन का भी सङ्केत करते हुए इनके माध्यम से मनुष्य को निरोग होने तथा उसकी आयु में वृद्धि का उल्लेख प्राप्त होता है। जैसे-

**प्रयुक्तया यया वेष्ट्या राजयक्ष्मा पुरा जितः ।**
**तां वेदविहिताम् इष्टिमारोग्यार्थी प्रयोजयेत् ।।** (चरक चिकित्सा स्थान ८.१२१)

जो लोग यज्ञ नहीं करते, उनका चिन्तन, मनन याज्ञिकों के समान सात्त्विक नहीं हो पाता तथा वे सदाचार की ओर भी उन्मुख नहीं हो पाते। दुराचारी एवं अधर्मात्य व्यक्ति की आयु भी अल्प संभावित है अतः महाभारत में भीष्म पितामह ने युधिष्ठिर से कहा है -

**अधर्मज्ञा दुरा चारास्ते भवन्ति गतायुषः ।** (अनुशासन पर्व ...)

जबकि चरित्रवान एवं धार्मिक याज्ञिक प्रकृति के लोगों के बारे में वे कहते हैं -

**''शतं वर्षाणि जीवति''** वे स्वस्थ सबल नीरोग होकर पूर्ण एक सौ वर्ष की आयु प्राप्त कर जरावस्था के द्वारा मृत्यु को प्राप्त करते हैं। यही वेद प्रतिपादित ''देवहित-आयु'' भी है।

## दीर्घ संध्या से दीर्घ आयु

मनुस्मृति के चतुर्थ अध्यय में लिखा है कि ऋषियों ने दीर्घ काल तक दीर्घ सन्ध्या एवं गायत्री जप के द्वारा दीर्घायु प्राप्त किया -

**ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुयुः ।**
**प्रज्ञां यशश्च कीर्तिंच ब्रह्मवर्चसमेव च ।।** (मनु. ४.९४)

अथर्ववेद के एक अन्य मन्त्र (१९.७१.१) से भी सङ्केत मिलता है कि गायत्री-जप से आयुप्राण, कीर्ति आदि की प्राप्ति में वृद्धि होती है।

पञ्चमहायज्ञों में नृयज्ञ अर्थात् अतिथियज्ञ या घर में आये हुए विद्वान् सदाचार सफल अतिथि की पूजा का विधान भी 'यज्ञ' शत्य से वाध्य है। 'यज्ञ' का अर्थ बहुत व्यापक है। 'यज्ञ' शब्द पश्च महायज्ञों का वाचक है। इसका अर्थ केवल देवयज्ञ या अग्निहोम ही नहीं है। ब्रह्मयज्ञ अर्थात् सन्ध्या तथा अतिथि यज्ञ आदि की यज्ञ में अन्तर्भूत है। इसी कारण विद्वान् अतिथि के प्रति नमन या सत्कार मात्र से तथा उनके द्वारा प्रत्युक्त आशीर्वचन मात्र से भी मनुष्य की आयु की वृद्धि सम्भावित है। इसी कारण मनुस्मृति में कहा है-

**अभिवादनशीलस्य नित्यं बृद्धोपसेविनः।**
**चत्वारि तस्य वर्धन्ते आयुर्विद्या यशो बलम्॥** (मनुस्मृति २.११२)

अस्तु कुछ भी हो वास्तव में ''देवहित-आयु'' अर्थात् यज्ञमय जीवन का निर्माण करते हुए समस्त इन्द्रियों से स्वस्थ सबल सक्रिय रहते हुए कम से कम ११६ वर्ष जीवन बिताकर जरावस्था द्वारा मृत्यु की प्राप्ति हो हम वैदिक भावना को हृदयाङ्गम कर सकते हैं। वेद ने हमें सङ्केतों में ही इसका उपदेश कर दिया है। हम वेद के इन संदेशों को ठीक तरह से समझे तथा जीवन में क्रियान्वित करें तो निश्चय ही सार्थकता को प्राप्त कर सकते हैं। वेदमन्त्रों के उपदेश हमें जीवन की सफलता एवं उसके उद्देश्य के प्रति निरन्तर प्रेरित करते हैं।

❑

